## ॥ अथ भू वराह हवन विधिः ॥

ॐ ॥ आचम्य प्रा००। देशकालौ संकीर्त्य ॥ श्री विष्णु प्रे००। श्री विष्णु प्री००॥ यजमानस्य नाम नक्षत्रादिकं उक्त्वा ॥ अस्माकं सर्वेषां सकुटुम्बानां क्षेमस्थैर्य अभय वीर्य विजय आयुरारोग्य ऐश्वर्य अभिवृध्यर्थं धर्म अर्थ काम मोक्ष चतुर्विध पुण्य पुरुषार्थ सिद्ध्यर्थं मम गृहे गोष्टे व्यवहार स्थले च सकल विध भू संबंधि दोष निरसनार्थं अत्र संकल्पित भू व्यवहारेषु सकल विवाद रूपात्मक प्रतिबंधक दोष परिहार पूर्वक भूलाभ सिद्ध्यर्थं अप्राप्त भू प्राप्त्यर्थं प्राप्त भूलक्ष्मी स्थिरता सिद्ध्यर्थं शाश्वत सुखोपभोग सिद्ध्यर्थं गृह सौख्यता सिद्ध्यर्थंश्रीवराह रूपि महाविष्णु परामानुग्रहेण अस्मिन् भूमौवर्तिष्यमाणसकलदुर्देवतानांनिर्गमनार्थंचोरभय अग्निभय विषभय राजभय भूकंपादिभौगोळिकभय निवारण पूर्वक सर्वसंपत् समृद्धि धन धान्यादि वृद्ध्यर्थं शत्रुभिः कृत षट्कर्म जन्य दोष परिहारार्थं( प्रश्न मार्गे सूचित सकल दोष परिहारार्थं) श्रीभूवराह रूपि महाविष्णु प्रसाद सिद्ध्यर्थं श्री वराह महामंत्र हवनाख्यं

कर्म करिष्ये ॥ तत्रादौ गुरु गणपति पूजनं स्वस्तिपुण्याह वाचनं गौरीमातृका पूजनं पूजाधिकर सिद्ध्यर्थे न्यास मूलमंत्र जपाराधनं भगवत्पूजनं कलशप्रतिष्ठापनं कल्पोक्त पूजनं उल्लेखनादि अग्नि प्रतिष्ठापन पूर्वक कल्पोक्तहवनं पूर्णाहुतिं ब्राह्मण पूजनं प्रसाद ग्रहणादिकं कर्म करिष्ये ॥ इति संकल्प्य ॥

॥ **अथ यंत्रं** ॥ मध्ये प्रणवं । तद्बहिः षट्कोणं । तद्बहिः चतुर्दलं । तद्बहिरष्टदलं ।तद्बहिः षोडशदळं । तद्बहिर्वृत्त त्रयं ।तद्बहिः चतुष्कोणं ॥

कलश प्रतिष्ठापनादिकं कृत्वा । सुवर्ण भूवराह प्रतिमां अग्न्युत्तरणादिकं कृत्वा कलशोपरि स्थाप्य देवं आवाहयेत् ॥

ॐ भूः भूवराह स्वरूपि महाविष्णुं आवाहयामि ॥ ॐभुवः०॥ ॐस्वः०॥ ॐ महः०॥ ॐभूर्भुवः स्वः ०॥ वैष्णव पीठे समावाह्य पूजयेत् ॥ प्राण प्रतिष्ठापनं कृत्वा । हस्ते कुसुमाक्षतान् गृहीत्वा ध्यायेत् ॥

अथ ध्यानं ॥ॐ उद्यद्भास्व समाभास ००॥

ॐ जानोरापादमुदद्यत्कनकमिव हिमप्रख्यमाजानुनाभेः
कंटादानाभिवह्नप्रभमथ शिरसश्चागलं नीलवर्णं ।
मौळेर्व्योमाभमाङ्कं करलसदरिशंखासिखेटं गदाख्या–
शक्तीष्टाभीतियुक्तं प्रणमत वसुधोल्लासिदंष्ट्रं वराहं ॥
भूवराह स्वरूपि महाविष्णवे नमः ध्यायामि ध्यानं समर्पयामि ॥

ॐ सहस्र शीर्षेति नारायण पुरुषोनुष्टुप् । षोडशोपचार पूजने विनियोगः ॥आसनादिकं दत्वा ॥ देवस्य सानिध्याभिवृद्ध्यर्थे न्यास मूलमंत्र जपे विनियोगः ॥ आदौ तत्वन्यास मातृकान्यासादिकं कृत्वा नारायणाष्टाक्षर मंत्रं यथाशक्ति जप्त्वा । वराह मंत्र न्यासाख्यं करिष्ये ॥ अस्य श्री वराहमंत्रस्य भार्गव ऋषिः। अनुष्टुप् छंदः। श्रीवराहो देवता।हुं बीजं। स्वाहा शक्तिः।न्यासे विनियोगः ॥ ॐ एकशृंङ्गाय हृदयाय नमः । ॐ व्योमोल्काय शिरसे स्वाहा ।ॐ तेजोधिपतये शिखायै वषट् ।
ॐ विश्वरूपाय कवचाय हुं । ॐ महादंष्ट्राय अस्त्राय फट् ॥ ॐ नमो भगवते हृदयाय नमः । ॐ वराह रूपाय शिरसे स्वाहा । ॐ भूर्भुवःस्वः पतये शिखायै

वषट् । ॐ भूपतित्वं मे कवचाय हुं । ॐ देहि ददापय स्वाहा अस्त्राय फट् ॥

**न्यास भेदः**–ॐ ॐ हृदयाय नमः । ॐ वराहाय शिरसे स्वाहा । ॐ भूधराय शिखायै वौषट् ।
ॐ परमात्मने कवचाय हुं । ॐ सर्वज्ञाय नेत्राभ्यां वषट् । ॐ सर्व शक्तये अस्त्राय फट् इति दिग्बंधः ॥
ॐ पूर्णज्ञानात्मने हृदयाय नमः । ॐ पूर्णैश्वर्यात्मने शिरसे स्वाहा । ॐ पूर्णप्रभात्मने शिखायै वौषट् ।
ॐ पूर्णानंदात्मने कवचाय हुं । ॐ पूर्णतेजात्मने नेत्राभ्यां वषट् ।ॐ पूर्णशक्त्यात्मने अस्त्राय फट् ।
इति वा ॥ षडंगन्यासः ॥ इति मध्वमंत्र रत्नाकरे)ध्यानं उक्त्वा मूलमंत्रं जपेत् ॥

**अथ मूलमंत्रः** ॥ ॐ हूं नमो भगवते वराह रूपाय भूर्भुवःस्वः पतये भूपतित्वं मे देहि ददापय स्वाहा ॥
**('हूं' इति वराह बीजं)**

**अथ वराह अष्टाक्षरः** ॥ अस्य श्री वराह अष्टाक्षर मंत्रस्य ब्रह्मा ऋषिः (शिरसि)। गायत्री छंदः(मुखे)। वराहो देवता (हृदये)॥ॐ ॐ हृदयाय नमः । वराहाय शिरसे स्वाहा ।

भूधराय शिखायै वषट् । परमात्मने कवचाय हुं । ॐ सर्वज्ञाय नेत्राभ्यांवषट्। ॐ सर्वशक्तये अस्त्राय फट् इति दिग्बंधः॥ (ॐ पूर्णज्ञानात्मने हृदयाय नमः । इत्यादिना वा षडंङ्गन्यासः)

**अथ ध्यानं ॥**

ॐ कृष्णाङ्गं त्वतिनीलवक्त्रनळिनं पद्मस्थितं स्वाङ्कगं
क्षोणीशक्तिमुदार बाहुभिरथो शंखं गदामंबुजं ।
भूलक्ष्मीरतिकांतिभिः परिवृतं चर्मासिसंदीप्तिभिः
चक्रं बिभ्रतमुग्र कांतिमनिशं देवं वराहं भजे ॥

ॐ हूं वराहाय नमः ॥ इति मंत्रः ॥

**अथ चतुर्दशाक्षर वराह मंत्रः** ॥ अस्य श्री चतुर्दशाक्षर वराह मंत्रस्य ब्रह्मा ऋषिः (शिरसि) । शक्वरी छंदः (मुखे) । वराहो देवता(हृदये)॥ जपे विनियोग॥

{न्यासः त्रयस्त्रिंशदक्षरन्यासवत् }

**मंत्रः-ॐ नमो भगवते महावराहाय स्वाहा ॥**

ॐ वराहरूपाय विद्महे भूधरायधीमहि। तन्नो विष्णुःप्रचोदयात् ॥

**पुराणोक्तवाराह मन्त्रः**॥ॐनमः श्रीवराहाय धरण्युद्धरणाय स्वाहा ॥

पाद्यादि पुष्पांतोपचारान् दत्वा ॥

**अथ आवरण पूजां करिष्ये** ॥ मध्ये वराहाय नमः ॥ चतुर्दिक्षु । ॐ एकशृंङ्गाय हृदयाय नमः ।
ॐ व्योमोल्काय शिरसे स्वाहा । ॐ तेजोधिपतये शिखायै वषट् । ॐ विश्वरूपाय कवचाय हुं ॥ आग्नेयादि विदिक्षु । ऊर्ध्वं अधः च ।ॐमहादंष्ट्राय अस्त्राय फट्(इति षड्वारं) ॥ प्रथमावरणं स००॥

तद्बहिः–ॐ चक्राय नमः।ॐशंखाय०।ॐ कृपाणाय०। ।
ॐखेटाय०।ॐगदायै०।ॐशक्तये०।ॐवराय०।
ॐअभयाय०॥ द्वितीयावरणं स००॥

इंद्रादिभिः तृतीयावरणं स०॥

वज्रादिभिः चतुर्थावरणं स०॥

**अथ अङ्गपूजां करिष्ये** ॥

दंष्ट्रायां ॐ सशैलवनगरारण्यापगायै श्री वसुधायै नमः । हुंकृतौ ॐ वागीश्वर्यै०। निश्वासे ॐवायवे०। दक्ष वाम बाह्वोः ॐ रविशशिभ्या ंनमः। कुक्षौ ॐ अष्टभ्यो

वसुभ्यो०॥ ( अष्टवसवः – धरः श्रवस्तथा सोम आपोग्निर्वायुरेव च । प्रत्यूषश्च प्रभासश्च वसवोष्टौ समीरिताः)॥ श्रुतिपथे ॐ पूर्वदिक् वासिभ्यो०। दृशोः ॐ अश्विभ्यां०। पादयोः ॐ ब्राह्मणेभ्यो०। हृदय पद्मे ॐ हरये ०। मुखे ॐ रुद्राय ०॥ इति अङ्गपूजा ॥

**अथ अष्टोत्तरशतनाम पूजां करिष्ये** ॥ ॐ वराहाय नमः। ॐमहीनाथाय०।ॐ पूर्णानंदाय०। ॐ जगत्पतये०। ॐनिर्गुणय०। ॐ निष्कलाय०। ॐ अनंताय०। ॐदंडकांतकृते०।ॐअव्ययाय०।ॐहिरण्याक्षांतकृते०। १०।ॐदेवाय०।ॐपूर्णषाड्गुण्यविग्रहाय०।ॐपयोदविहारिणे ०।ॐसर्वप्राणिहितेरताय०।ॐअनंतरूपाय०। ॐअनंतश्रियै० ।ॐजितमन्यवे०।ॐभयापहाय०। ॐवेदांतवेद्याय०।ॐवेदिने०।२०॥ॐवेदगर्भाय०। ॐसनातनाय०। ॐसहस्राक्षाय०। ॐपुण्यगंधाय०। ॐकल्पकृते०।ॐक्षितिभृते०।ॐहरये०। ॐपद्मनाभाय०। ॐसुराध्यक्षाय० ।ॐहेमांगाय०।३०॥ॐदक्षिणामुखाय०। ॐमहाकोलाय०।ॐमहाबाहवे०। ॐसर्वदेवनमस्कृताय०। ॐहृषीकेशाय०।

ॐ प्रसन्नात्मने०। ॐभवभक्तभयापहाय० ।ॐयज्ञकृते०

ॐयज्ञभृते०।ॐसाक्षिणे०।४०॥ॐयज्ञांगाय०।

ॐयज्ञवाहनाय०।ॐहव्यभुजे०।ॐहव्यदेहाय०।

ॐसदाव्यक्ताय०।ॐ कृपाकराय०। ॐदेवहूतिगुरवे०।

ॐकांताय०।ॐधर्मगुह्याय०।ॐवृषाकपये०।५०॥

ॐस्रुवतुंडाय०।ॐवक्रतुंडाय०।ॐनीलकेशाय०।

ॐमहाबलाय०।ॐपूतात्मने०।ॐवेदनेत्रे०।

ॐवेदहर्तृशिरोहराय०।ॐवेदांतविदे०। ॐवेदगुह्याय०

ॐसर्ववेदप्रवर्तकाय०।६०।ॐगंभीराक्षाय०।ॐत्रिधाम्ने०।

ॐगंभीरात्मने०।ॐअमरेश्वराय०।ॐआनंदवनगाय०।

ॐदिव्याय०।ॐब्रह्मनासासमुद्भवाय०।

ॐसिंधुतीरनिवासिने०।ॐक्षेमकृते०।ॐसात्वतांपतये०।

ॐ इंद्रत्रात्रे०।ॐजगत्त्रात्रे०।ॐइंद्रदोर्दंड गर्वघ्ने०।

ॐ भक्तवश्याय०।ॐ सदावश्याय०। ॐनिजानंदाय०।

ॐरमापतये०।ॐश्रुतिप्रियाय०।ॐशुभांगाय०।

ॐपुण्यश्रवणकीर्तनाय०।८०॥ॐसत्यकृत्सत्य

संकल्पाय०। ॐसत्यवाचे०। ॐसत्यविक्रमाय०।

ॐसत्येनिगूढाय०।ॐसत्यात्मने०।ॐकालातीताय०।
ॐगुणातिगाय०।ॐपरंज्योतये०।ॐपरंधाम्ने०।
ॐपरमपुरुषाय०।ॐपराय०।ॐकल्याणकृत्कवये०।
ॐकर्त्रे०।ॐकर्मसाक्षिणे०।ॐ जितेंद्रियाय०।
ॐ कर्मकृते०। ॐकर्मकांडसंप्रदायप्रवर्तकाय०।
ॐसर्वांतगाय०।ॐशर्वगाय०।ॐ सर्वदाय०।
ॐसर्वभक्षकाय०।१००॥ॐसर्वलोकपतये०।ॐश्रीमते०।
ॐश्रीमुष्णेशाय०। ॐशुभेक्षणाय०। ॐसर्वसाक्षिणे०।
ॐसर्वदेवप्रियाय०।ॐसर्वेश्वराय०।ॐहरये०।१०८॥
अष्टोत्तर शतनामपूजांस०॥अथ धूप दीपादिकम्॥
ॐ यत्पुरुषं०००॥धूपं स०॥
ॐब्राह्मणोस्य००॥दीपं स०॥
ॐ चंद्रमामनसो००॥नैवेद्यं स०॥
ॐ नाभ्या आसीदंतरिक्षं००॥ तांबूलं स००॥
ॐ सप्तास्यासन्००॥ नीराजनं स००॥
ॐ यज्ञेन यज्ञमयजंत००॥ मंत्रपुष्पांजलिं स००॥
ॐ यानिकानि च पापानि००॥ प्रदक्षिणां स००॥
ॐ नमोस्त्वनंताय सहस्रमूर्तये००॥ नमस्कारान् स००॥

॥ अथ प्रार्थना ॥

ॐ नमस्तस्मै वराहाय लीलयोद्धरते महीं ।
खुरमध्यगतो यस्य मेरुः खणखणायते ॥
दंष्ट्राग्रेणोद्धता गौरुदधि परिवृता पर्वतैर्निम्नगाभिः ।
साकं मृत्पिंडवत्प्राग्वृहदुरु वपुषाऽनंतरूपेण येन ॥
सोऽयं कंसासुरारिर्मुरनरक दशास्यांत कृत्सर्वसंस्थः ।
कृष्णोविष्णुःसुरेशो नदतु मम रिपूनादिदेवो वराहः ॥
वामांगस्थ धरा करांजलि पुट प्रेमाति हृष्टांतरं
सीमातीत गुणं फणींद्रफणग श्रीमान्यपादांबुजं ।
कामाद्याकर चक्रशंख सुवरोद्दामाभयोद्यत्करं
सामादीड्य वराहरूपममलं हे मानसेमं स्मर ॥
कोलाय लसदाकल्प जालाय वनमालिने
नीलाय निजभक्तौघ पालाय हरये नमः ॥
कामाद्यंतर शत्रुभ्यो बाह्य शत्रुभ्य एव च
भीतं हरेऽसुराद्भीत देवानांऽह्ळाद पाहि मां ॥
आधिव्याधीनरीन् राज्ञो द्रोहिणोऽन्यांश्च दुर्जनान्
क्षिप्रं नाशय सर्वज्ञ कोलरूपि हरे मम ॥
कलिं खंडय तद्भृत्यान्दंडयाऽशु हरे मम ।

मनःशोधय सत् तत्वं बोधयेष्टं प्रसाधय ॥
इति प्रार्थयित्वा पुष्पाणि समर्पयेत् । कायेन वाचेति हरौ समर्पयेत् ॥ ॥ अग्नि प्रतिष्ठापनादिकं कृत्वा अन्वाधानं कुर्यात् ॥ (शांतिके वरद नाम अग्नि, पौष्टिके बलवर्धन)

॥**अथान्वाधानं**॥ – अत्र देवता परिग्रहार्थं अस्य लौकिकाग्नेः वैष्णवत्व सिद्ध्यर्थं०० चक्षुषी आज्येन । पुनरत्र प्रधानं ॥ नारायणाष्टाक्षरेण १०८ वारं आज्येन । प्रधानदेवता भूवराह प्रीत्यर्थे त्रयस्त्रिंशदक्षर वराह मंत्रेण १०८ वारं पूर्वापराज्येन पुनः तेनैव मंत्रेण १२६ वारं अष्टद्रव्यैः (आज्य, पायस, त्रिमध्वाक्त कमलपुष्प, अश्वत्थसमिध, मध्वाक्त लाजा, व्रीहि, तिल, पुनराज्य) वराह अष्टाक्षरेण १०८ वारं आज्येन । पुराणोक्त मंत्रेण १०८ वारं आज्येन। वराह मंत्रेण १०८आज्येन। गायत्र्या १०८ वारं आज्येन । पुरुषसूक्तेन षड्वारं हिरण्य सूक्तेन षड्वारं च आज्येन ( विशेष–क्षेत्रस्य पतिना इति मंत्रेण १०८ वारं समित्पायस आज्येन,)इंद्रादि लोकपालान् एकैक वारं समित्पायस आज्येन पीठावरण देवतान्

एकैक वारं आज्येन, न्यूनातिरिक्त दोष प्रायश्चित्तार्थं
व्याहृत्या १०८ वारं तिलव्रीहि द्रव्येण यक्ष्ये ॥

**त्रयत्रिंशदक्षर वराह मंत्रः –**

ॐ (हूं) नमो भगवते वराहरूपाय भूर्भुवःस्वः पतये भूपतित्वं मे देहिददापय स्वाहा ॥

**वराह अष्टाक्षरः**–ॐ भूवराहाय नमः(ऐश्वर्य प्रदानो मंत्रः–प्रपंचसार)

**गायत्री**–ॐवराहरूपाय विद्महे भूधरायधीमहि। तन्नो विष्णुःप्रचोदयात्॥

**पुराणोक्त मंत्रः–**

ॐ वराह रूपिणं देवं लोकनाथं महेश्वरं ।
मेदिन्युद्धारकं वंदे रक्ष रक्ष दयानिधे ॥

**पुराणोक्तवाराह मन्त्रः॥**

ॐनमः श्रीवराहाय धरण्युद्धरणाय स्वाहा ॥

यंत्र लेखन द्रव्यादि विषयः तंत्र ग्रंथेषु दृश्यते

॥ **जिज्ञासार्थं लघु चिन्तनं** ॥

सौवर्णे राज्यसिद्धिः । रजतफलके ग्रामसिद्धिः ।
ताम्रेसाहस्रस्वर्णसिद्धिः । क्षौमे लाभं धरायाः ।

पिचुतरु फलके कार्यसिद्धिः ॥ गोमयेन प्रोक्षणादि कृत्वा एव मण्डलं लेखितव्यं सर्वत्र । एतत्मन्त्रानुष्ठानं विविध उद्देशेन, विशेषतः सूचिता रीत्या अनुष्ठीयते ग्रंथाध्ययनं आवश्यकम् ॥

**॥ इति भूवराह हवन विधिः ॥**



**॥ भूवराह मण्डलः ॥**